वृद्धं—ज्यापयति, वर्षयति, अजिज्यपत् । अववर्षत् । प्रियं—प्रापयति । अपिप्रपत् । स्थिरम्—स्थापयति । अतिस्थपत् । स्फिरं—स्फापयति । अपिस्फपत् । उरुम्—वरयति । [वारयति] अवीवरत् । बहुलं—बंहयति । अबबंहत् । गुरुम्—गरयति । अजीगरत् । तृपं—त्रापयति । अतित्रपत् दीर्घं—द्राघयति । अदद्राघत् । वृन्दारकम्—वृन्दयति । अववृन्दत् । *

## अथ प्रत्ययमाला ।

"कण्डूयतेः सन्" । कण्डूयियिषति । क्यजन्तात् सन्—पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति, पुपुतित्रीयियिषति । अशिश्वीयिषति, अश्वीयियिषति । इन्द्रीयतेः सन्—इन्दिद्रीयिषति, इन्द्रीयियिषति । चिचन्द्रीयिषति । चन्दिद्रीयिषति, चन्द्रीयियिषति । चिचन्दिद्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति—पिप्रपयिषति, प्रापिपयिषति, प्रापयियिषति । उरुं विवारयिषति, वारिरयिषति, वारयियिषति । वाढं सिसाधयिषतीत्यादि रूपचयम् । यङ्सन्ण्यन्तात् सन्—बोभूयिषयिषति । यङ्णिच्सनन्तात् णिच् बोभूययिषयति ।

---

* "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥" "युवाल्पयोः कनन्यतरस्याम् ।" "विन्मतोर्लुक् ॥" "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षत्रप्द्राघिवृन्दाः ।" "अन्तिकबाढयोर्नेदसाधौ ॥" "प्रशस्यस्य श्रः" "ज्य च ।" "वृद्धस्य च ।" इत्यादिगणसूत्राण्यनुसन्धेयानि ॥

समाप्ता नामधातवः ।

## ग्रन्थशेषः ।

येषामनुग्रहत एव विवेकहीनो
विघ्नैः पुनःपुनरपि प्रतिहन्यमानः ।
सङ्कल्पसिद्धिजनितां मुदमस्मु वेऽद्य
तान् मातृतात-चरणान् प्रतमोऽभिवन्दे ॥

---

या सायणेनारचि धातुवृत्तिः
सारं समाकृष्य ततोऽन्यतश्च ।
मयायमारोप्यत "धातुरूप-
कल्पद्रुमः" काम्यफलाय लिप्सोः ॥

राज्ञा श्यामलवर्म्मणा क्रतुकृते यः कान्यकुब्जस्थला-
दानीतः शुनको यशोधर इति ख्यातो यथार्थाभिधः ।
विप्रो वेदविदांवरो बहुतपाः सम्मानसम्पद्युतं
वङ्गान्तर्गतसिद्धविक्रमपुरे संस्थापितश्चादरात् ॥

तत्पवित्रकुलोत्पन्नः सद्विद्याचारभूषितः ।
जनको जयचन्द्रो मे उमा माता तपस्विनी ॥
नवहयाष्टैकशाकाब्दे कृष्णजन्माष्टमीदिने ।
तयोः स्वर्गतयोः पादपद्मेष्वेष समर्प्यते ॥
ढाकाप्रदेशविख्यात-धलच्छलनिवासिना ।
शर्म्मणा गुरुनाथेन कलिकाताप्रवासिना ॥

सम्पूर्णोऽयं ग्रन्थः ।

---

इति शम् । ओं तत्सत् ।

देवाक्षरेण धात्वर्थं व्याख्याय राजभाषया ।
अष्टरामयुगाब्दे संवर्द्ध्य पुनरङ्कितः ।